काण्वः प्रगाथः (घौरः)  प्रगाथः (घौरः) काण्वः ।
,, प्रस्कण्वः  प्रस्कण्वः काण्वः ।
,, ब्रह्मातिथिः  ब्रह्मातिथिः ,,
,, मातरिश्वा  मातरिश्वा ,,
,, मेधातिथिः  मेधातिथिः ,,
,, मेध्यः  मेध्यः ,,
,, मेध्यातिथिः  मेध्यातिथिः,,
,, वत्सः  वत्सः ,,
,, शशकर्णः  शशकर्णः ,,
,, श्रुष्टिगुः  श्रुष्टिगुः ,,
,, सध्वंसः  सध्वंसः ,,
,, सुपर्णः  सुपर्णः ,,
,, सोभरिः  सोभरिः ,,
काण्वायनः अश्वसूक्ती  अश्वसूक्ती काण्वायनः ।
काण्वायनः गोपूक्ती  गोपूक्ती काण्वायनः ।
कात्यः उत्कीलः  उत्कीलः कात्यः ।
काद्रवेयः अर्बुदः (सर्पः)  अर्बुदः काद्रवेयः (सर्पः)।
कामायनी श्रद्धा  श्रद्धा कामायनी ।
कार्ष्णिः विश्वकः  विश्वकः कार्ष्णिः ।
काव्यः उशना  उशना काव्यः ।
काशिराजः प्रतर्दनः १०।१७९ । २ [१]
प्रतर्दनः काशिराजः ।
काश्यपः अवत्सारः  अवत्सारः काश्यपः ।
'' असितः  असितः ''
'' देवलः  देवलः ''
'' निध्रुविः  निध्रुविः ''
'' भूतांशः  भूतांशः ''
'' रेभः  रेभः ''
'' विवृहा  विवृहा ''
काश्यपौ रेभसूनू  रेभसूनू काश्यपौ ।
'' शिखण्डिन्यौ  शिखण्डिन्यौ ''
कुत्सः आंगिरसः १।९४-९८ । (४७), १०१-११५ (१६५), ९।९७।४५-५८। (१४) । [२२६]
कुमारः आग्नेयः ७।१०१ । (६), १०२ । (३) । [९]
'' आत्रेयः ५।२ । (१२)। [१२]
'' यामायनः १०।१३५ । (७) । [७]

कुरुसुतिः काण्वः ८।७६ । (१२), ७७ । (११), ७८। (१०) । [३३]
कुलमलबर्हिषः शैलूषिः १०।१२६ । (८)। [८]
कुशिकः ऐषीरथिः ३।३१ । (२२) । [२२]
'' सौभरिः १०।१२७ । (८) [८]
कुसीदी काण्वः ८।८१ । (९), ८२ । (९), ८३ । (९)। [२७]
कूर्मः गार्त्समदः २।२७ । (१७), २८ । (११), २९ । (७)। [३५]
'' गृत्समदः २।२७। (१७), २८। (११), २९। (७) । [३५]
कृतयशाः आंगिरसः ९।१०८ । १०,११। (२) । [२]
कृत्नुः भार्गवः ८।७९ । (९) । [९]
कृशः काण्वः ८।५५ [७] । (५) । [५]
कृष्णः आंगिरसः ८।८५ (९), ८६। (५), ८७ । (६), १०।४२ । (११), ४३, (११), ४४। (११) । [५३]
केतुः आग्नेयः १०।१५६ । (५)। [५]
कौत्सः दुर्मित्रः  दुर्मित्रः कौत्सः ।
'' सुमित्रः  सुमित्रः ''
कौशिकः गाथी  गाथी कौशिकः ।
क्षत्रमनसः ५।४४ । १० । [१]
गयः आत्रेयः ५।९ । (७), १० (७) । [१४]
'' प्लातः १०।६३ । (१७), ६४ । (१७)। [३४]
गर्गः भारद्वाजः ६।४७ । (३१)। [३१]
गर्भकर्ता त्वष्टा  त्वष्टा गर्भकर्ता ।
गविष्ठिरः आत्रेयः ५।१ । (१२) । [१२]
गातुः '' ५।३२ । (१२) । [१२]
गाथिनः विश्वामित्रः  विश्वामित्रः गाथिनः ।
गाथी कौशिकः ३।१९-२२ । (२०)। [२०]
गार्त्समदः कूर्मः  कूर्मः गार्त्समदः ।
गृत्समदः २।२७ । (१७), २८।(११), २९।(७)। [३५]
गृत्समदः शौनकः (आंगिरसः शौनहोत्रः) भार्गवः २।१-३ । (४०), ८-२६ । (१८८) ३०-४३। (१३५), ९।८६। ४६-४८ (३) । [३६६]
गृहपतिः सहसःपुत्रः ८।१०२ । (२२) । [२२]

गोतमः (सप्तर्षीणां एकः)१०।१३७। ३ [१]
" राहूगणः १।७४-९३। (२०४), ९।३१। (६), ६७। ७-९। (३)। [२१३]
" " (सप्तर्षीणां एकः) सप्तर्षयः गोतमो राहूगणः
गोधा (ऋषिका) १०।१३४। ६ उत्तरार्धः- ७। [१॥]
गोपवनः आत्रेयः ८।७३। (१८), ७४। (१५)। [३३]
गोपायनः बन्धुः   बन्धुः गोपायनः।
" विप्रबन्धुः   विप्रबन्धुः "
" श्रुतबन्धुः   श्रुतबन्धुः "
" सुबन्धुः   सुबन्धुः "
गोषूक्ती काण्वायनः ८।१४। (१५), १५। (१३)। [२८]
गौतमः नोधा   नोधा गौतमः।
" वामदेवः   वामदेवः "
गौपायनः बन्धुः   बन्धुः गौपायनः।
" विप्रबन्धुः   विप्रबन्धुः "
" श्रुतबन्धुः   श्रुतबन्धुः "
गौरिवीतिः शाक्त्यः ५।२९। (१५), ९।१०८। १-२ (२), १०।७३। (११), ७४। (६)। [३४]
घर्मः तापसः १०।११४। (१०)। [१०]
" सौर्यः १०।१८१। ३। [१]
घोरः आंगिरसः ३।३६। १०। [१]
घोषा काक्षीवती १०।३९। (१४), ४०। (१४)। [२८]
घौरः कण्वः   कण्वः घौरः।
घौरः काण्वः प्रगाथः   प्रगाथः काण्वः घौरः।
घौषेयः सुहस्त्यः   सुहस्त्यः घौषेयः।
चक्षुः मानवः ९।१०६। ४-६ (३)। [३]
" सौर्यः १०।१५८। (५) [५]
चाक्षुषः अग्निः   अग्निः चाक्षुषः।
चित्रमहा वासिष्ठः १०।१२२। (८)। [८]
च्यवनः भार्गवः १०।१९। (८)। [८]
जमदग्निः ३।६२। १६-१८ (३); १०।१३७। ६ (१)। [४]
" भार्गवः ८।१०१। (१६); ९।६२। (३०); ६५। (३०), ६७। १६-१८ (३)। [७९]
जमदग्निः भार्गवः (सप्तर्षीणां एकः)   सप्तर्षयः (६ जमदग्निः भार्गवः)

जमदग्निविश्वामित्रौ १०।१६७। (४)। [४]
जयः ऐन्द्रः १०।१८०। (३)। [३]
जरत्कर्णः ऐरावतः (सर्पः) १०।७६। (८)। [८]
जरिता (शार्ङ्गः) १०।१४२। १-२। [२]
जानः वृशः   वृशः जानः।
जामदग्निः परशुरामः   परशुरामः जामदग्निः।
जामदग्न्यः रामः   रामः जामदग्न्यः।
जुहूः ब्रह्मजाया १०।१०९। (७)। [७]
जूतिः (वातरशनः) १०।१३६। १। [१]
जेता माधुच्छन्दसः १।११। (८)। [८]
तपुर्मूर्धा बार्हस्पत्यः १०।१८२। (३)। [३]
तर्यः ५।४४। १२ [१]
तान्वः पार्थ्यः १०।९३। (१५)। [१५]
तापसः अग्निः   अग्निः तापसः।
" घर्मः   घर्मः "
" मन्युः   मन्युः "
तार्क्ष्यः अरिष्टनेमिः   अरिष्टनेमिः तार्क्ष्यः।
" सुपर्णः   सुपर्णः "
तिरश्चीः आंगिरसः ८।९५। (९), ९६ (२१)। [३०]
तृणपाणिः ५।४९। ५ (१), ६।४८। (२२)। [२३]
त्रसदस्युः पौरुकुत्स्यः ४।४२। (१०), ५।२७। (६), ९।११०। (१२)। [२८]
त्रितः आप्त्यः १।१०५। (१९); ८।४७। (१८), ९।३३। (६), ३४। (६), १०२। (८); १०।१-७। (४९) [१०६]
त्रिशिराः त्वाष्ट्रः १०।८। (९), ९ (९)। [१८]
त्रिशोकः काण्वः ८।४५। (४२)। [४२]
त्रैवृष्णः त्र्यरुणः (भारतः राजा)   त्र्यरुणः त्रैवृष्णः।
त्र्यरुणः त्रैवृष्णः (भारतः राजा) ५।२७। (६), ९।११०। (१२)। [१८]
त्वष्टा गर्भकर्ता १०।१८४। (३)। [३]
त्वाष्ट्रः त्रिशिराः   त्रिशिराः त्वाष्ट्रः।
दक्षिणा प्राजापत्या १०।१०७। (११)। [११]
दमनः यामायनः १०।१६ (१४)। [१४]
दाक्षायणी अदितिः   अदितिः दाक्षायणी।
दार्ढच्युतः इध्मवाहः   इध्मवाहः दार्ढच्युतः।
दिव्यः आंगिरसः १०।१०७। (११) [११]

दीर्घतमाः औचथ्यः १।१४०-१६४। (२४२)। [२४२]
दुर्मित्रः कौत्सः १०।१०५ । (११) । [११]
दुवस्युः वान्दनः १०।१०० । (१२) । [१२]
दृळहच्युतः आगस्त्यः ९।२५ । (६) । [६]
देवगन्धर्वः विश्वावसुः विश्वावसुः देवगन्धर्वः।
देवजामयः इन्द्रमातरः १०। १५३ । (५) । [५]
देवमुनिः ऐरम्मदः १०। १४६ । (६) [६]
देवरातः वैश्वामित्रः (शुनःशेपः आजीगर्तिः)
१ । २४ । (१५) [१५]
देवलः काश्यपः ९ । ५-२४ । (१६४) । [१६४]
देववातः भारतः ३ । २३ । (५)। [५]
देवशुनी सरमा(ऋषिका) सरमा देवशुनी (ऋषिका)
देवश्रवाः भारतः ३ । २३ । (५) । [५]
" यामायनः १०।१७। (१४)। [१४]
देवाः १०।५१ । १,३,५,७,९ (५);
५३ ।१-३, ६-११ (९)। [१४]
देवातिथिः काण्वः ८।४।२१ । [२१]
देवापिः आर्ष्टिषेणः (वृष्टिकामः) १०।९८।(१२) [१२]
दैर्घतमसः कक्षीवान् कक्षीवान् दैर्घतमसः ।
दैर्घतमसः कक्षीवान् कक्षीवान् औशिजः
औशिजः दैर्घतमसः ।
दैवोदासिः परुच्छेपः परुच्छेपः दैवोदासिः ।
" प्रतर्दनः प्रतर्दनः "
द्युतानः मारुतः ८।९६ । (२१) । [२१]
द्युम्नः विश्वचर्षणिः आत्रेयः ५।२३ । (४) । [४]
द्युम्नीकः वासिष्ठः ८।८७ । (६) । [६]
द्रोणः (शार्ङ्गः) १०।१४२ । ३,४ (२)। [२]
द्वितः आप्त्यः ९।१०३ । (६)। [६]
द्वितः मृक्तवाहाः आत्रेयः ५।१८ । (५)। [५]
धरुणः आंगिरसः ५।१५ । (५) । [५]
धानाकः लुशः लुशः धानाकः ।
धिष्ण्याः ऐश्वराः अग्नयः अग्नयः धिष्ण्याः ऐश्वराः ।
ध्रुवः आंगिरसः १०।१७३ । (६) । [६]
नदी ऋषिका ३।३३ । ४,६,८,१० । (४) । [४]
नभः प्रभेदनः वैरूपः १०।११२ । (१०) । [१०]
नरः भारद्वाजः ६।३५ । (५) , ३६ । (५) । [१०]
नहुषः मानवः ९।१०१ । ७-९ (३) । [३]

नाभाकः काण्वः ८।३९ (१०) , ४० (१२) , ४१ (१०),
४२ (६) । [३८]
नाभानेदिष्ठः मानवः १०।६१ (२७) , ६२ (११) । [३८]
नारदः काण्वः ८।१३ (३३), ९।१०४ (६), १०५ (६)।
[४५]
नारायणः १०।९० । (१६) । [१६]
नार्मेधः शकपूतः शकपूतः नार्मेधः।
नाहुषः ययातिः ययातिः नाहुषः।
निध्रुविः काश्यपः ९।६३ (३०) । [३०]
निवावरी सिकता सिकता निवावरी ।
नीपातिथिः काण्वः ८।३४ । १-१५ । [१५]
नृमेधः आंगिरसः ८।८९ (७), ९० (६), ९८ (१२),
९९ (८); ९।२७। (६), २९ । (६)। [४५]
नेमः भार्गवः ८।१०० (१-३, ६-१२) । [१०]
नैर्ऋतः कपोतः कपोतः नैर्ऋतः ।
नोधा गौतमः १।५८-६४ (७४), ८।८८ । (६),
९।९३ । (५) । [८५]
नौधसः एकद्यूः एकद्यूः नौधसः ।
पणयः असुराः १०।१०८ । १, ३, ५, ७, ९ । [५]
पतङ्गः प्राजापत्यः १०।१७७ । (३)। [३]
परमेष्ठी प्रजापतिः प्रजापतिः परमेष्ठी ।
पराशरः शाक्त्यः १।६५-७३ । (९१),
९।९७ । ३१-४४(१४) । [१०५]
परुच्छेपः दैवोदासिः १।१२७-१३९ । (१००) । [१००]
पर्वतः काण्वः ८।१२ । (३३), ९।१०४ । (६),
१०५ । (६), [४५]
पवित्रः आंगिरसः ९।६७ । २२-३२ (११) । ७३ । (९)
८३ । (५) । [२५]
परशुरामः जामदग्निः १०।११० । (११) । [११]
[ निर्णयसागरोक्तः पाठः ]
पायुः भारद्वाजः ६।७५ । (१९), १०।८७ । (२५) । [४४]
पारुच्छेपिः अनानतः अनानतः पारुच्छेपिः ।
पावकः अग्निः ८।१०२ । (२२), १०।१४० । (६) । [२८
पुनर्वत्सः काण्वः ८।७ । (३६) । [३६]
पुरुमीळहः आंगिरसः ८।७१ । (१५) । [१५]
" सौहोत्रः ४।४३ । (७), ४४ । (७)। [१४

बृहदुक्थः वामदेव्यः १०।५४।(६), ५५।(८), ५६।(७), [२१]
बृहद्दिवः आथर्वणः १०।१२०।(९)। [९]
बृहन्मतिः आंगिरसः ९।३९।(६), ४०।(६), १०।७१।(११), ७२।(९)। [३२]
बृहस्पतिः लौक्यः १०।७२।(९)। [९]
ब्रह्मचारी अगस्त्यशिष्यः अगस्त्यशिष्यः ब्रह्मचारी।
ब्रह्मजाया जुहूः जुहूः ब्रह्मजाया।
ब्रह्मवादिनी रोमशा रोमशा ब्रह्मवादिनी।
ब्रह्मातिथिः काण्वः ८।५।(३९)। [३९]
ब्राह्मः ऊर्ध्वनाभा ऊर्ध्वनाभा ब्राह्मः।
ब्राह्मः रक्षोहा रक्षोहा ब्राह्मः।
भयमानः वार्षागिरः १।१००।(१९)। [१९]
भरद्वाजः बार्हस्पत्यः ६।१-३०।(३१६), ३७-४३।(३३), ५३-७४।(१८०), ९।६७।१-३ (३)। [५३२]
भरद्वाजः १०।१३७।(१)। [१]
भरद्वाजः बार्हस्पत्यः (सप्तर्षीणां एकः) सप्तर्षयः (१ भरद्वाजो बार्हस्पत्यः)
भर्गः प्रागाथः ८।६०।(२०), ६१।(१८)। [३८]
भारतः देववातः देववातः भारतः।
भारतः राजा अश्वमेधः अश्वमेधः भारतः राजा।
,, ,, त्रसदस्युः त्रसदस्युः ,, ,,
,, ,, त्र्यरुणः त्र्यरुणः ,, ,,
भारद्वाजः ऋजिश्वा ऋजिश्वा भारद्वाजः।
भारद्वाजः गर्गः गर्गः भारद्वाजः।
,, नरः नरः ,,
,, पायुः पायुः ,,
,, वसुः वसुः ,,
,, शासः शासः ,,
,, शिरिम्बिठः शिरिम्बिठः ,,
,, शुनहोत्रः शुनहोत्रः ,,
,, सप्रथः सप्रथः ,,
,, सुहोत्रः सुहोत्रः ,,
भारद्वाजी रात्रिः रात्रिः भारद्वाजी।
भार्गवः इटः इटः भार्गवः।
,, कविः कविः ,,
भार्गवः कृत्नुः कृत्नुः भार्गवः।
,, गृत्समदः शौनकः गृत्समदः शौनकः भार्गवः
,, आंगिरसः शौनहोत्रः ,,
च्यवनः च्यवनः भार्गवः।
,, जमदग्निः जमदग्निः ,,
,, नेमः नेमः ,,
,, प्रयोगः प्रयोगः ,,
,, वेनः वेनः ,,
,, सोमाहुतिः सोमाहुतिः ,,
,, स्यूमरश्मिः स्यूमरश्मिः ,,
भार्म्यश्वः मुद्गलः मुद्गलः भार्म्यश्वः।
भालन्दनः वत्सप्रिः वत्सप्रिः भालन्दनः।
भावयव्यः १।१२६।६। [१]
भिक्षुः आंगिरसः १०।११७।(९)। [९]
भिषक् आथर्वणः १०।९७। [२३]। (२३)
भुवनः आप्त्यः १०।१५७।(५)। [५]
भूतांशः काश्यपः १०।१०६।(११)। [११]
भृगुः वारुणिः ९।६५।(३०), १०।१९।(८)। [३८
भौमः अत्रिः अत्रिः भौमः।
भौवनः विश्वकर्मा विश्वकर्मा भौवनः।
,, साधनः साधनः ,,
मत्स्यः साम्मदः ८।६७।(२१)। [२१]
मत्स्याः (जालनद्धाः बहवः) ८।६७।(२१)। [२१
मथितः यामायनः १०।१९।(८)। [८]
मधुच्छन्दाः वैश्वामित्रः १।१-१०।(१०२), ९।१।(१०)। [११२
मनुः आप्सवः ९।१०६।७-९। [३]
,, वैवस्वतः ८।२७-३१।(५९)। [५९]
,, सांवरणः ९।१०१।१०-१२ (३)। [३]
मन्युः तापसः १०।८३।(७), ८४।(७)। [१४
,, वासिष्ठः ९।९७।१०-१२ (३)। [३]
मरुतः १।१६५।३, ५, ७, ९ (४)। [४
मातरिश्वा काण्वः ८।५४ [६]।(८)। [८]
माधुच्छन्दसः अघमर्षणः अघमर्षणः माधुच्छन्दसः।
,, जेता जेता ,,
मानवः चक्षुः चक्षुः मानवः।
,, नहुषः नहुषः ,,

मानवः नाभानेदिष्ठ     नाभानेदिष्ठः मानवः
,, शार्यातः     शार्यातः ,,
मान्धाता यौवनाश्वः १०।१३४। १-५,६पूर्वार्धः। [५॥]
मान्यः मैत्रावरुणिः ८।६७। (२१)। [२१]
मायी     ५।४४। ११। [१]
मारीचः कश्यपः     कश्यपः मारीचः।
मारुतः द्युतानः     द्युतानः मारुतः।
माषाः अकृष्टाः ९।८६। १-१०, ३१-४० (२०)[२०]
मुद्गलः भार्म्यश्वः १०।१०२। (१२)। [१२]
मुष्कवान् इंद्रः     इंद्रः मुष्कवान्।
मूर्धन्वान् आंगिरसः १०।८८। (१९)। [१९]
,, वामदेव्यः १०।८८। (१९)। [१९]
मृक्तवाहाः आत्रेयः द्वितः  द्वितः मृक्तवाहाः आत्रेयः।
मृळीकः वासिष्ठः ९।९७। २५-२७ (३);
१०।१५०। (५)। [८]
मेधातिथिः काण्वः १।१२-२३। (१४३); ८।१।
३-२९ (२७); २। १-४२ (४२)।
३२। (३०); ९।२। (१०),
४१। (६), ४२। (६),
४३। (६)। [२७०]
मेध्यः ,, ८।५३ [५]। (८), ५७ [९]
(४), ५८ [१०]। (३)। [१५]
मेध्यातिथिः ,, ८।१। ३-२९ (२७); ३। (२४);
३३। (१९), [७०]
मैत्रावरुणः अगस्त्यः     अगस्त्यः मैत्रावरुणः।
मैत्रावरुणिः मान्यः     मान्यः मैत्रावरुणिः
,, वासिष्ठः     वासिष्ठः ,,।
यक्ष्मनाशनः प्राजापत्यः १०।१६१। (५)। [५]
यजतः     ५।४४। १०-१२ (३)। [३]
यजतः आत्रेयः ५।६७। (५), ६८। (५)। [१०]
यज्ञः प्राजापत्यः १०।१३०। (७)। [७]
यमः वैवस्वतः (ऋषिः) १०।१०।२,४,६,८,९,१०,
१२, १४ (८); १४। (१६)। [२४]
यमी वैवस्वती ( ऋषिका) १०।१०। १, ३, ५, ७,
११, १३ (६), १५४। (५)। [११]
ययातिः नाहुषः ९।१०१। ४-६। [३]
यविष्ठः सहसः पुत्रः ८।१०२। (२२)। [२२]

यामायनः ऊर्ध्वकृशनः     ऊर्ध्वकृशनः यामायनः।
,, कुमारः     कुमारः ,,
,, दमनः     दमनः ,,
,, देवश्रवाः     देवश्रवाः ,,
,, मथितः     मथितः ,,
,, शंखः     शंखः ,,
,, संकुसुकः     संकुसुकः ,,
यौवनाश्वः मान्धाता     मान्धाता यौवनाश्वः।
रक्षोहा ब्राह्मः   १०।१६२। (६) [६]
रहूगणः आंगिरसः ९।३७। (६), ३८। (६) [१२]
राजर्षिः ऋणंचयः     ऋणंचयः राजर्षिः।
रातहव्यः आत्रेयः ५।६५। (६), ६६। (६) [१२]
रात्रिः भारद्वाजी १०।१२७। (८) [८]
रामः जामदग्न्यः १०।११०। (११) [११]
राहूगणः गौतमः     गौतमः राहूगणः।
रेणुः वैश्वामित्रः ९।७०। (१०), १०।८९। (१८)[२८]
रेभः काश्यपः   ८।९७। (१५) [१५]
रेभसूनुः काश्यपः ९।९९। (८); १००। (९) [१७]
रेभसूनू काश्यपौ ९।९९। (८), १००। (९) [१७]
रोमशा ब्रह्मवादिनी १।१२६। ७। [१]
रौहिदश्वः वसुमनाः     वसुमनाः रौहिदश्वः।
लवः ऐन्द्रः   १०।११९। (१३) [१३]
लुशः धानाकः   १०।३५। (१४), ३६। (१४) [२८]
लोपामुद्रः   १।१७९। १, २। [२]
लौक्यः बृहस्पतिः     बृहस्पतिः लौक्यः।
लौपायनः बन्धुः     बन्धुः लौपायनः।
,, विप्रबन्धुः     विप्रबन्धुः ,,
,, श्रुतबन्धुः     श्रुतबन्धुः ,,
,, सुबन्धुः     सुबन्धुः ,,
वत्सः आग्नेयः   १०।१८७। (५) [५]
,, काण्वः   ८।६। (४८), ११। (१०) [५८]
वत्सप्रिः भालन्दनः ९।६८। (१०), १०।४५। (१२),
४६। (१०) [३२]
वभ्रुः वैखानसः   १०।९९। (१२) [१२]
वरुणः अग्निः सोमः १०।१२४। (१, ५-९) [६]
वव्रिः आत्रेयः   ५।१९। (५) [५]
वशः अश्व्यः   ८।४६। (३३) [३३]

वसिष्ठः मैत्रावरुणिः ७।१-३२। (२९२), ३३। १-९ (९), ३४-१०४। (५३५); ९।६७। १९-२१ (३), ९०। (६), ९७। १-३ (३)। [८४८]
वसिष्ठः ९।६७। २२-३२ (११); १०-१३७। ७ (१)। [१२]
वसिष्ठः मैत्रावरुणिः (सप्तर्षीणां एकः) सप्तर्षयः।
वसिष्ठपुत्राः ७।३३। १०-१४ (५)। [५]
वसुः भारद्वाजः ९।८०। (५), ८१। (५), ८२। (५)। [१५]
वसुकर्णः वासुक्रः १०।६५। (१५), ६६। (१५)। [३०]
वसुकृत् वासुक्रः १०।२०-२६। (६६)। [६६]
वसुक्रः ऋषिः १०।२८। ३,४,५,७,९,११। [६]
,, ऐन्द्रः १०।२७। (२४), २९। (८)। [३२]
,, वासिष्ठः ९।९७। २८-३० (३)। [३]
वसुक्रपत्नी इन्द्रस्नुषा (ऋषिका) १०।२८। १। [१]
वसुमनाः रौहिदश्वः १०।१७९। ३। [१]
वसुरोचिषः अंगिरसः सहस्रम् ८।३४। १६-१८। [३]
वसुश्रुतः आत्रेयः ५।३। (१२), ४। (११), ५। (११), ६। (१०)। [४४]
वसूयवः आत्रेयाः ५।२५। (९), २६। (९)। [१८]
वाक् आम्भृणी १०।१२५। (८)। [८]
वाच्यः प्रजापतिः प्रजापतिः वाच्यः।
वाजम्भरः सप्तिः सप्तिः वाजम्भरः।
वातजूतिः (वातरशनः) १०।१३६। २। [१]
वातरशनाः (१ ऋष्यशृंगः, २ एतशः, ३ करिक्रतः, ४ जूतिः, ५ वातजूतिः, ६ विप्रजूतिः, ७ वृषाणकः।) १०।१३६। (७)। [७]
वातायनः अनिलः अनिलः वातायनः।
,, उलः उलः ,,
वाध्र्यश्वः सुमित्रः सुमित्रः वाध्र्यश्वः
वान्दनः दुवस्युः दुवस्युः वान्दनः।
वामदेवः गौतमः ४।१-१७। (२०६); १८। २-३॥, ८-१३ (८॥), १९-४१। (२३९), ४५-५८। (१०७)। [५६०॥]
वामदेव्यः अंहोमुक् अंहोमुक् वामदेव्यः।
,, बृहदुक्थः बृहदुक्थः ,,

वामदेवः मूर्धन्वान् मूर्धन्वान् वामदेव्यः।
वारुणिः भृगुः भृगुः वारुणिः।
,, सत्यधृतिः सत्यधृतिः ,,
वार्षागिरः अम्बरीषः अम्बरीषः वार्षागिरः।
,, ऋज्राश्वः ऋज्राश्वः ,,
,, भयमानः भयमानः ,,
,, सहदेवः सहदेवः ,,
,, सुराधाः सुराधाः ,,
वार्ष्टिहव्यः उपस्तुतः उपस्तुतः वार्ष्टिहव्यः।
वासिष्ठः इंद्रप्रमतिः इंद्रप्रमतिः वासिष्ठः।
,, उपमन्युः उपमन्युः ,,
,, कर्णश्रुत् कर्णश्रुत् ,,
,, चित्रमहाः चित्रमहाः ,,
,, द्युम्नीकः द्युम्नीकः ,,
,, प्रथः प्रथः ,,
,, मन्युः मन्युः ,,
,, मृळीकः मृळीकः ,,
,, वसुक्रः वसुक्रः ,,
,, वृषगणः वृषगणः ,,
,, व्याघ्रपाद् व्याघ्रपाद् ,,
वासुक्रः वसुकर्णः वसुकर्णः वासुक्रः।
,, वसुकृत् वसुकृत् ,,
विप्रजूतिः (वातरशनः) १०।१३६। ३। [१]
विप्रबन्धुः गोपायनः ५।२४। (४)। [४]
,, गौपायनः १०।५७-६०। (४०)। [४०]
,, लौपायनः ५।२४। (४)। [४]
विमदः ऐन्द्रः १०।२०-२६। (६६)। [६६]
,, प्राजापत्यः १०।२०-२६। (६६)। [६६]
विरूपः आंगिरसः ८।४३। (३३), ४४। (३०), ७५। (१६)। [७९]
विवस्वान् आदित्यः १०।१३। (५)। [५]
विवृहः काश्यपः १०।१६३। (६)। [६]
विभ्राट् सौर्यः १०।१७०। (४)। [४]
विश्वकः कार्ष्णिः ८।८६। (५)। [५]
विश्वकर्मा भौवनः १०।८१। (७), ८२। (७)। [१
विश्वचर्षणिः आत्रेयः द्युम्नः द्युम्नः विश्वचर्षणिः आत्रे
विश्वमनाः वैयश्वः ८।२३-२६। (१०९), [१०९]

विश्ववारः ५।४४ । ११ । [१]
विश्ववारा आत्रेयी ५।२८। (६)। [६]
विश्वसामा आत्रेयः ५।२२। (४)। [४]
विश्वामित्रः गाथिनः ३।१-१२ (१४०), २४-३२ (११७),३३।१-३,५,७,९,११-१३। (९), ३४। (११)। ३५। (११),३६ । १-९,११। (१०), ३७-५३ (१४४)। ५७-६२। (५६) । ९। ६७। १३-१५ (३)। [५०१]
विश्वामित्रः गाथिनः (सप्तर्षीणां एकः) सप्तर्षयः।
विश्वामित्रः १०।१३७। ५। [१]
विश्वामित्रः जमदग्निः १०।१६७। (४)। [४]
विश्वावसुः देवगन्धर्वः १०।१३९।(६)। [६]
विष्णुः प्राजापत्यः १०।१०४। (३)। [३]
विहव्यः आंगिरसः १०।१२८। (९)। [९]
वीतहव्यः " ६।१५। (१९)। [१९]
वृशः जानः ५।२। (१२)। [१२]
वृषगणः वासिष्ठः ९।९७।७-९ (३)। [३]
वृषाकपिः ऐन्द्रः १०।८६।७,१३,२२ (३)। [३]
वृषाणकः वातरशनः १०।१३६।४। [१]
वेनः भार्गवः ९।८५।(१२); १०।१२३।(८)। [२०]
वैकुण्ठः इन्द्रः — इन्द्रः वैकुण्ठः।
वैखानसः वम्रः — वम्रः वैखानसः।
वैखानसाः (शतम्) ९।६६। (३०)। [३०]
वैतहव्यः अरुणः — अरुणः वैतहव्यः।
वैन्यः पृथुः — पृथुः वैन्यः।
वैयश्वः विश्वमनाः — विश्वमनाः वैयश्वः।
वैराजः ऋषभः — ऋषभः वैराजः ।
वैरूपः अष्टादंष्ट्रः — अष्टादंष्ट्रः वैरूपः ।
" नभःप्रभेदनः — नभःप्रभेदनः "
" शतप्रभेदनः — शतप्रभेदनः "
" सध्रिः — सध्रिः "
वैवस्वतः मनुः — मनुः वैवस्वतः।
" यमः — यमः "
वैवस्वती यमी — यमी वैवस्वती ।

वैश्वानरः अग्निः — अग्निः वैश्वानरः।
वैश्वामित्रः अष्टकः — अष्टकः वैश्वामित्रः।
" ऋषभः — ऋषभः "
" कतः — कतः "
" देवरातः — देवरातः "
" पूरणः — पूरणः "
" प्रजापतिः — प्रजापतिः "
" मधुच्छन्दाः — मधुच्छन्दाः "
" रेणुः — रेणुः "
व्यश्वः आंगिरसः ८।२६। (२५)। [२५]
व्याघ्रपाद् वासिष्ठः ९।९७।१६-१८ (३)। [३]
शंयुः बार्हस्पत्यः ६।४४। (२४), ४५। (३३), ४६ (१४), ४८। (२२)। [९३]
शकपूतः नार्मेधः १०।१३२। (७)। [७]
शक्तिः वासिष्ठः ७।३२। २६,२७ (२), ९।९७। १९-२१ (३) १०८।३,१४-१६ (४)। [९]
शंखः यामायनः १०।१५। (१४)। [१४]
शची पौलोमी १०।१५९। (६)। [६]
(शतम्) वैखानसाः — वैखानसाः (शतम्)।
शतप्रभेदनः वैरूपः १०।११३। (१०)। [१०]
शबरः काक्षीवतः १०।१६९। (४)। [४]
शशकर्णः काण्वः ८।९। (२१)। [२१]
शश्वती आंगिरसी (ऋषिका) ८।१। ३४। [१]
शाक्त्यः गौरिवीतिः — गौरिवीतिः शाक्त्यः।
" पराशरः — पराशरः "
शाकरः ऋषभः — ऋषभः शाकरः।
शार्ङ्गः जरिता १-२; " द्रोणः ३-४; " सारिसृक्कः ५-६; " स्तम्बमित्रः ७-८ — १०।१४२। (८) [८]
शार्यातः मानवः १०।९२। (१५)। [१५]
शासः भारद्वाजः १०।१५२। (५)। [५]
शिखण्डिन्यौ अप्सरसौ " काश्यपौ — ९।१०४। (६)। [६]
शिबिः औशीनरः १०।१७९। (१)। [१]
शिरिम्बिठः भारद्वाजः १०।१५५। (५)। [५]

शिशुः आंगिरसः ९।११२। (४)। [४]
शुनःशेपः आजीगर्तिः १।२५-३० (८२) ;९। ३। (१०)। [९२]
शुनःशेपः आजीगर्तिः कृत्रिमः देवरातः वैश्वामित्रः वा- १।२४। (१५)। [१५]
शुनहोत्रः भारद्वाजः ६।३३। (५)। ३४। (५); [१०]
शैरीषिः सुवेदाः — सुवेदाः शैरीषिः।
शैलूषिः कुल्मलबर्हिषः — कुल्मलबर्हिषः शैलूषिः।
शौनकः गृत्समदः — गृत्समदः शौनकः।
शौनहोत्रः आंगिरसः — आंगिरसः शौनहोत्रः।
श्यावाश्वः आत्रेयः ५।५२-६१। (११८); ८१। (५), ८२। (९), ८।३५-३८। (४८), ९।३२। (६)। [१८६]
श्यावाश्विः अन्धीगुः — अन्धीगुः श्यावाश्विः।
श्येनः आग्नेयः १०।१८८। (३)। [३]
श्रद्धा कामायनी १०।१५१। (५)। [५]
श्रुतकक्षः आंगिरसः ८।९२। (३३)। [३३]
श्रुतबन्धुः गौपायनः १०।५७। (६),५८। (१२), ५९।(१०), ६०। (१२)। [४०]
" गोपायनः ५।२४। (३)। [३]
" लौपायनः ५।२४। (३)। [३]
श्रुतवित् ५।४४।१२। [१]
" आत्रेयः ५।६२। (९)। [९]
श्रुष्टिगुः काण्वः ८।५१ [३]। (१०)। [१०]
संवननः आंगिरसः १०।१९१। (४)। [४]
संवरणः प्राजापत्यः ५।३३। (१०); ३४। (९)। [१९]
संवर्तः आंगिरसः १०।१७२। (४)। [४]
संकुसुकः सामायनः १०।१८। (१४)। [१४]
सत्यधृतिः वारुणिः १०।१८५। (३)। [३]
सत्यश्रवाः आत्रेयः ५।७९। (१०)। ८०। (६)। [१६]
सदापृणः " ५।४४।१२ (१), ४५। (११)। [१२]
सध्वंसः काण्वः ८।८। (२३)। [२३]
सध्रिः " ५।४४।१०। [१]
सध्रिः वैरूपः १०।११४। (१०)। [१४]
सप्तर्षयः ४अत्रिः भौमः
२कश्यपः मारीचः
३गोतमः राहूगणः
६जमदग्निः भार्गवः
१भरद्वाजः बार्हस्पत्यः
७वसिष्ठः मैत्रावरुणिः
५विश्वामित्रः गाथिनः ९।१०७।(२६)। [२६]
सप्तगुः आंगिरसः १०।४७। (८)। [८]
सप्तवध्रिः ८।७३। (१८)। [१८]
" आत्रेयः ५।७८। (९)। [९]
सप्तिः वाजम्भरः १०।७९। (७), ८०। (७)। [१४]
सप्रथः भारद्वाजः १०।१८१।२। [१]
सरमा देवशुनी (ऋषिका) १०।१०८।२,४,६,८, १०, ११, (६)। [६]
(सर्पः) अर्बुदः काद्रवेयः — अर्बुदः काद्रवेयः सर्पः।
" ऊर्ध्वग्रावा आर्बुदिः — ऊर्ध्वग्रावा आर्बुदिः "
" ऐरावतः जरत्कर्णः — ऐरावतः जरत्कर्ण "
सर्वहरिः ऐन्द्रः १०।९६। (१३)। [१३]
सव्यः आंगिरसः १।५१-५७। (७२)। [७२]
ससः आत्रेयः ५।२१। (४)। [४]
सहदेवः वार्षागिरः १।१००। (१९)। [१९]
सहसःपुत्रः गृहपतिः — गृहपतिः सहसःपुत्रः।
" " यविष्ठः — यविष्ठः " "
सहस्रम् वसुरोचिषः आंगिरसः ८।३४।१६-१८(३)। [३]
सांवरणः मनुः — मनुः सांवरणः।
सांख्यः अत्रिः — अत्रिः सांख्यः।
साधनः भौवनः १०।१५७। (५)। [५]
साम्मदः मत्स्यः — मत्स्यः साम्मदः।
सारिसृक्वः शार्ङ्गः १०।१४२।५, ६ (२)। [२]
सार्पराज्ञी १०।१८९। (३)। [३]
सावित्री सूर्या (ऋषिका) — सूर्या सावित्री ऋषिका
सिकता निवावरी ९।८६। ११-२०,३१-४० २०। [२०]
सिन्धुक्षित् प्रैयमेधः १०।७५। (९)। [९]
सिन्धुद्वीपः आम्बरीषः १०।९। (९)। [९]
सुकक्षः आंगिरसः ८।९२। (३३), ९३। (३४)। [६७]
सुकीर्तिः काक्षीवतः १०।१३१। (७)। [७]
सुतंभरः ५।४४।१३। [१]
सुतंभरः आत्रेयः ५।११। (६), १२: (६), १३। (६) १४। (६)। [२४]

सुदाः पैजवनः | सुदासः " — १०।१३३। (७)। [७]

सुदीतिः आंगिरसः ८।७१। (१५)। [१५]

सुपर्णः काण्वः ८।५९ [११]। (७)। [७]

" तार्क्ष्यः १०।१४४। (६)। [६]

सुबन्धुः गोपायनः | " लौपायनः — ५।२४। २। [२]

सुमित्रः वाध्र्यश्वः १०।६९। (१२), ७०। ११। [२३]

सुमित्रः कौत्सः १०।१०५। ११। [११]

सुराधाः वार्षागिरः १।१००। १९। [१९]

सुवेदाः शैरीषिः १०।१४७। (५)। [५]

सुहस्त्यः घौषेयः १०।४१। (३)। [३]

सुहोत्रः भारद्वाजः ६।३१। (५), ३२। (५)। [१०]

सूनुः आर्भवः १०।१७६। (४)। [४]

सूर्या सावित्री ऋषिका १०।८५। (४७)। [४७]

सोभरिः काण्वः ८।१९-२२। (९९), १०३। (१४)। [११३]

सोमः अग्निः वरुणः १०।१२४। १,५-९ (६)। [६]

सोमाहुतिः भार्गवः २।४। (९), ५। (८), ६। (८), ७। (६)। [३१]

| | |
|---|---|
| सौचीकः अग्निः | आग्नः सौचीकः। |
| सौभरिः काण्वः | काण्वः सौभरिः। |
| सौम्यः बुधः। | बुधः सौम्यः। |
| सौर्यः अभितपाः | अभितपाः सौर्यः। |
| " घर्मः | घर्मः " |
| " चक्षुः | चक्षुः " |
| " विभ्राट् | विभ्राट् " |
| सौहोत्रः अजमीळहः | अजमीळहः सौहोत्रः। |
| " पुरुमीळहः | पुरुमीळहः " |

स्तम्बमित्रः शार्ङ्गः १०।१४२। ७,८ (२)। [२]

| | |
|---|---|
| स्यौरः अग्नियुतः | अग्नियुतः स्यौरः। |
| " अग्नियूपः | अग्नियूपः " |

स्वस्त्यात्रेयः ५।५०। (५), ५१। (१५)। [२०]

हरिमन्तः आंगिरसः ९।७२। (९)। [९]

हर्यतः प्रागाथः ८।७२। (१८)। [१८]

हविर्धानः आंगिः १०।११। (९), १२। (९), १३। (५)। [२३]

हिरण्यगर्भः प्राजापत्यः १०।१२१। (१०)। [१०]

हिरण्यस्तूपः आंगिरसः १।३१-३५। (७१), ९।४। (१०), ६९। (१०)। [९१]

| | |
|---|---|
| हैरण्यस्तूपः अर्चन् | अर्चन् हैरण्यस्तूपः। |

# ॥ अनुवाकसूत्रम् ॥

[१]अग्निमीळे, [२]सुरूपकृत्नु,—[३]मैद्रं सानसि,—[४]मग्निं दूतं, [५]सोमानं स्वरणं, [६]कस्य नूनं, [७]त्वमग्ने प्रथमः, [८]प्र वो यह्व,—[९]मग्ने विवस्व,—[१०]दुभि त्यं मेषं, [११]नू चित्सहोजाः, [१२]पश्वा न तायु,—[१३]मुपप्रयंतः, [१४]प्र ये शुंभंते, [१५]इमं स्तोम,—[१६]मिन्द्रं मित्रं वरुणं, [१७]नासत्याभ्यां, [१८]कादित्था,—[१९]ग्निं होतार,—[२०]मां त्वा जुवो, [२१]वेदिषदे, [२२]ऽबोध्यग्निः, [२३]कया शुभा, [२४]युवो रजांसि; [२५]त्वमग्ने द्युभि,—[२६]र्यो जात एव, [२७]गणानां त्वा, [२८]ऽऽतें पितः; [२९]सोमस्य मा, [३०]प्र वो देवाये,—[३१]च्छांतित्वें,—[३२]द्रं मतिरि,—[३३]मं महे; [३४]त्वां ह्यग्ने, [३५]भद्रं ते, [३६]यन्न इंद्रः, [३७]प्र ऋभुभ्यो,—[३८]ऽग्र पिबा;—[३९]ऽबोध्यग्निः, [४०]प्र वेधसे, [४१]महिं महे, [४२]विदा दिव, [४३]आ रुद्रासो, [४४]यदद्य स्थ;—[४५]स्त्वं ह्यग्ने प्रथम,—[४६]स्त्वमग्ने यज्ञानां, [४७]वृषा मदो, [४८]यो रयिवो, [४९]द्वे वः, [५०]स्तुषे नरा,—[५१]ग्निं नर,—[५२]स्त्वे ह यत्, [५३]प्र शुक्रैतु, [५४]क ईं व्यक्ता, [५५]अप स्वसुः,

प्र[56] वीर्या; मा[57] चिदन्य,—म्[58]हाँ इंद्र, इन्द्रः[59] सुतेषु, व[60]यमु त्वां, या[61] यजाती,—मे[62] विप्रस्या,—ग्न[63] आ याहि, यो[64] राजा, ऽऽतू[65] न इंद्र क्षुमंतं, गौ[66]र्धयति;[]स्वा[67]दिष्ठया, प[68]वस्व दक्षसाधनो, ऽयां[69] वीती, प्र[70] देवमच्छा, प्र[71] तं आशवो,—ऽस्य[72] प्रेषा, स[73]खाय ऽआ निषीदता;—ऽग्ने[74] बृहन्,—त्व[75]ष्टा दुहित्रे, प्र[76] देवत्रा, ऽच्छा[77] म इन्द्रमि,—दा[78]मित्था, भ[79]द्रा अग्नेः, स[80]त्येनोत्तभिता, सं[81] जागृवद्भिः,—रिं[82]द्र हह्य, त[83]मस्य द्यावापृथिवी, ना[84]सदासीच्, छौ[85]स इत्थेत्यनुवाकाः पंचाशीतिः ॥८५॥

# अनुवाकानुक्रमणी।

| अनुवाकः | प्रारंभाः | सूक्तानि | मंत्र-संख्या | मंडलानां मंत्रसंख्या |
|---|---|---|---|---|
| १ | अग्निमीळे | ३( १-३ ) | ३० | |
| २ | सुरूपकृत्नुमूतये | ४( ४-७ ) | ४० | |
| ३ | एन्द्र सानसिं | ४(८-११) | ४० | |
| ४ | अग्निं दूतं | ६(१२-१७) | ६६ | |
| ५ | सोमानं स्वरणं | ६(१८-२३) | ७७ | |
| ६ | कस्य नूनं | ७(२४-३०) | ९७ | |
| ७ | त्वमग्ने प्रथमो | ५(३१-३५) | ७१ | |
| ८ | प्र वो यह्वं | ८(३६-४३) | ९६ | |
| ९ | अग्ने विवस्वद् | ७(४४-५०) | ८२ | |
| १० | अभि त्यं मेषं | ७(५१-५७) | ७२ | |
| ११ | नू चित् सहोजा | ७(५८-६४) | ७४ | |
| १२ | पश्वा न तायुं | ९(६५-७३) | ९१ | |
| १३ | उपप्रयन्तो | ११(७४-८४) | ९८ | |
| १४ | प्र ये शुम्भन्ते | ९(८५-९३) | १०६ | |
| १५ | इमं स्तोममर्हते | १२(९४-१०५) | १२५ | |
| १६ | इन्द्रं मित्रं | १०(१०६-११५) | १०७ | |
| १७ | नासत्याभ्यां | ५(११६-१२०) | ८३ | |
| १८ | कदित्था नॄः | ६(१२१-१२६) | ७० | |
| १९ | अग्निं होतारं | ७(१२७-१३३) | ६० | |
| २० | आ त्वा जुवो | ६(१३४-१३९) | ४० | |
| २१ | वेदिषदे | १७(१४०-१५६) | ११९ | |
| २२ | अबोध्यग्निर्ज्म | ८(१५७-१६४) | ११३ | |
| २३ | कया शुभा | १५(१६५-१७९) | १२४ | |
| २४ | युवो रजांसि | १२(१८०-१९१) | ११५ | |
| | | १९१ | | |
| | | | | प्रथम-मंडलस्य मंत्रसंख्या २००६ |
| २५(१) | त्वमग्ने द्युभिः | ११(१-११) | ११० | |
| २६(२) | यो जात एव | ११(१२-२२) | १०५ | |
| २७(३) | गणानां त्वा | १०(२३-३२) | १०५ | |
| २८(४) | आ ते पितः | ११(३३-४३) | १०९ | |
| | | ४३ | | |
| | | | | द्वितीय-मंडलस्य मंत्रसंख्या ४२९ |
| २९(१) | सोमस्य मा | १२(१-१२) | १४० | |
| ३०(२) | प्र वो देवाय | १७(१३-२९) | ११८ | |
| ३१(३) | इच्छन्ति त्वा | ९(३०-३८) | १२८ | |
| ३२(४) | इन्द्रं मतिर्हृद | १५(३९-५३) | ११३ | |
| ३३(५) | इमं महे | ९(५४-६२) | १०८ | |
| | | ६२ | | |
| | | | | तृतीय-मंडलस्य मंत्रसंख्या ६१७ |
| ३४(१) | त्वां ह्यग्ने | १०(१-१०) | १३२ | |
| ३५(२) | भद्रं ते अग्ने | ११(११-२१) | ११० | |
| ३६(३) | यस्त इन्द्रो | ११(२२-३२) | १२६ | |

| अनुवाकः प्रारंभः | सूक्तानि | मंत्र-संख्या | मंडलानां मंत्रसंख्या |
|---|---|---|---|
| ३७(४) प्र ऋभुभ्यो | १३(३३-४५) | १११ | |
| ३८(५) अग्नं पिबा | १३(४६-५८) | १०० | |
| | ५८ | | |
| | चतुर्थ-मंडलस्य मंत्रसंख्या | | ५८९ |
| ३९(१) अबोध्यग्निः | १४(१-१४) | १२३ | |
| ४०(२) प्र वेधसे | १८(१५-३२) | १३० | |
| ४१(३) महि महे | १२(३३-४४) | १२७ | |
| ४२(४) विदा दिवो | १२(४५-५६) | १२३ | |
| ४३(५) आ रुद्रासः | १६(५७-७२) | ११० | |
| ४४(६) यदद्य स्थः | १५(७३-८७) | ११४ | |
| | ८७ | | |
| | पंचम-मंडलस्य मंत्रसंख्या | | ७२७ |
| ४५(१) त्वं ह्यग्ने | १५(१-१५) | १२५ | |
| ४६(२) त्वमग्ने यज्ञानां | ८(१६-२३) | १३७ | |
| ४७(३) वृषा मदः | २०(२४-४३) | ११७ | |
| ४८(४) यो रयिवो | ६(४४-४९) | १३९ | |
| ४९(५) हुवे वो | १२(५०-६१) | १२९ | |
| ५०(६) स्तुषे नरा | १४(६२-७५) | ११८ | |
| | ७५ | | |
| | षष्ठ-मंडलस्य मंत्रसंख्या | | ७६५ |
| ५१(१) अग्निं नरो | १७(१-१७) | १४५ | |
| ५२(२) त्वे ह यत् | १६(१८-३३) | १६१ | |
| ५३(३) प्र शुक्रैतु | २२(३४-५५) | १४६ | |
| ५४(४) क ईं व्यक्ता | १५(५६-७०) | १४४ | |
| ५५(५) अप स्वसुः | १९(७१-८९) | ११९ | |
| ५६(६) प्र वीरया | १५(९०-१०४) | १२६ | |
| | १०४ | | |
| | सप्तम-मंडलस्य मंत्रसंख्या | | ८४१ |
| ५७(१) मा चिदन्यद् | ५(१-५) | १६० | |
| ५८(२) महाँ इन्द्रो | ७(६-१२) | १७७ | |
| ५९(३) इन्द्रः सुतेषु | ८(१३-२०) | १७३ | |
| ६०(४) वयमु त्वाम् | १०(२१-३०) | १८६ | |
| ६१(५) यो यजाति | १२(३१-४२) | १७१ | |
| ६२(६) इमे विप्रस्य | ६(४३-४८) | १७१ | |

| अनुवाकः प्रारंभः | सूक्तानि | मंत्र-संख्या | मंडलानां मंत्रसंख्या |
|---|---|---|---|
| ६३(७) अग्न आ | १०(६०-६९) | १५९ | |
| ६४(८) यो राजा | ११(७०-८०) | १४९ | |
| ६५(९) आ तू न | १३(८१-९३) | १४९ | |
| ६६(१०) गौर्धयति | १०(९४-१०३) | १४१ | |
| | ९२ | १६३६ | |

[वालखिल्यस्य सूक्तानि (४९-५९) ११ मंत्रसंख्या ८०]

१०३

| अनुवाकः प्रारंभः | सूक्तानि | मंत्र-संख्या | मंडलानां मंत्रसंख्या |
|---|---|---|---|
| | अष्टम-मंडलस्य मंत्रसंख्या | | १७१६ |
| ६७(१) स्वादिष्ठया | २४(१-२४) | २०४ | |
| ६८(२) पवस्व दक्ष | ३६(२५-६०) | १९४ | |
| ६९(३) अया वीती | ७(६१-६७) | २१२ | |
| ७०(४) प्र देवमच्छा | १८(६८-८५) | १२८ | |
| ७१(५) प्र त आशवः | ११(८६-९६) | १२९ | |
| ७२(६) अस्य प्रेषा | ७(९७-१०३) | ११७ | |
| ७३(७) सखाय आ | ११(१०४-११४) | १२४ | |
| | ११४ | | |
| | नवम-मंडलस्य मंत्रसंख्या | | ११०८ |
| ७४(१) अग्ने बृहन्तु | १६(१-१६) | १४८ | |
| ७५(२) त्वष्टा दुहित्रे | १३(१७-२९) | १४६ | |
| ७६(३) प्र देवत्रा | १३(३०-४२) | १४५ | |
| ७७(४) अच्छा म | १८(४३-६०) | १६८ | |
| ७८(५) इदमित्था | ८(६१-६८) | १२६ | |
| ७९(६) भद्रा अग्नेः | १६(६९-८४) | १३५ | |
| ८०(७) सत्येनोत्तभिता | ६(८५-९०) | १४२ | |
| ८१(८) सं जागृवद्भिः | ९(९१-९९) | १४३ | |
| ८२(९) इंद्र दृह्य | १३(१००-११२) | १४२ | |
| ८३(१०) तमस्य द्यावा | १६(११३-१२८) | १४६ | |
| ८४(११) नासदासीन्नो | २३(१२९-१५१) | १४४ | |
| ८५(१२) शास इत्था | ४०(१५२-१९१) | १६९ | |
| | १९१ | | |
| | दशम-मंडलस्य मंत्रसंख्या | | १७५४ |

सूक्तानि १०२८ दशानां मंडलानां मंत्रसंख्या १०५५२

# अध्यायानुक्रमणी ।

| अध्यायः | प्रारंभः | वर्गः | सूक्तानि | मंत्रसंख्या | अष्टकानां मंत्रसंख्या |
|---|---|---|---|---|---|
| १ | अग्निमीळे | ३७ | १९( १-१९ ) | १९४ | |
| २ | अयं देवाय | ३८ | १३( २०-३२ ) | १८९ | |
| ३ | एतायामोप | ३५ | १४( ३३-४६ ) | १७३ | |
| ४ | अयं वां मधु | २९ | १५( ४७-६१ ) | १५२ | |
| ५ | प्र मन्महे | ३१ | १९( ६२-८० ) | १८५ | |
| ६ | इन्द्रो मदाय | ३२ | १४( ८१-९४ ) | १६३ | |
| ७ | द्वे विरूपे | ३७ | १८(९५-११२) | १७९ | |
| ८ | इदं श्रेष्ठं | २६ | ९(११३-१२१) | १३५ | |
| | | २६५ | १२१ | | |
| | | | | प्रथमाष्टकस्य मंत्रसंख्या | १३७० |
| ९ | प्र वः पान्तं | २६ | १५(१२२-१३६) | १३७ | |
| १० | सुषुमा यातम् | २७ | २१(१३७-१५७) | १४३ | |
| ११ | वसू रुद्रा | २६ | ८(१५८-१६५) | १३२ | |
| १२ | तन्नु वोचाम | २९ | १८(१६६-१८३) | १४२ | |
| १३ | ता वामद्य | २९ | १६(१८४-१९१; २।१-८) | १५९ | |
| १४ | नि होता | ३२ | १५(९-२३) | १५७ | |
| १५ | सेमामविड्ढि | २५ | १३(२४-३६) | १३७ | |
| १६ | मन्दस्व होत्रा | २७ | १३(३७-४३; ३।१-६) | १४० | |
| | | २२१ | ११९ | | |
| | | | | द्वितीयाष्टकस्य मंत्रसंख्या | ११४७ |
| १७ | प्र य आरुः | ३४ | २३(७-२९) | १७६ | |
| १८ | इच्छन्ति त्वा | २६ | १०(३०-३९) | १३७ | |
| १९ | इन्द्र त्वा | ३१ | १६(४०-५५) | १५८ | |
| २० | न ता मिनन्ति | २५ | ११(५६-६२; ४।१-४) | १३५ | |
| २१ | वैश्वानराय | २६ | १४(५-१८) | १४८ | |
| २२ | एवा त्वा | ३० | १४(१९-३२) | १५९ | |
| २३ | प्र ऋभुभ्यो | २७ | १८(३३-५०) | १४४ | |
| २४ | इदमु त्य | २६ | १६(५१-५८; ५।१-८) | १५२ | |
| | | २२५ | १२२ | | |
| | | | | तृतीयाष्टकस्य मंत्रसंख्या | १२०९ |
| २५ | त्वामग्ने हवि | ३३ | २४(९-३२) | १६८ | |
| २६ | महि महे | २८ | १४(३३-४६) | १४६ | |
| २७ | प्रयुञ्जती | ३१ | १६(४७-६२) | १६४ | |
| २८ | ऋतस्य गोपा | ३६ | २६(६३-८७; ६।१) | १७७ | |
| २९ | त्वं हि क्षैत | ३० | १५(२-१६) | १६० | |
| ३० | पिबा सोम | २५ | १२(१७-२८) | १३२ | |
| ३१ | इन्द्रं वो | ३५ | १९(२९-४७) | १७६ | |
| ३२ | यज्ञा यज्ञा | ३२ | १४(४८-६१) | १६६ | |
| | | २५० | १४० | | |
| | | | | चतुर्थाष्टकस्य मंत्रसंख्या | ११८९ |
| ३३ | स्तुषे नरा | २७ | १५(६२-७५; ७।१) | १४३ | |
| ३४ | जुषस्व नः | ३० | १८(२-१९) | १६६ | |
| ३५ | उग्रो जज्ञे | ३० | १६(२०-३५) | १५५ | |
| ३६ | प्र ब्रह्मैतु | ३० | २४(३६-५९) | १५६ | |
| ३७ | यदद्य सूर्य | २७ | २१(६०-८०) | १५० | |
| ३८ | प्रत्यु | २५ | २०(८१-१००) | १४५ | |
| ३९ | तिस्रो वाचः | ३३ | ८(१०१-१०४; ८।१-४) | १६५ | |
| ४० | दूरादिहेव | ३६ | ७(५-११) | १८३ | |
| | | २३८ | १२९ | | |
| | | | | पंचमाष्टकस्य मंत्रसंख्या | ११६३ |
| ४१ | य इन्द्र | ४० | ९(१२-२०) | २०६ | |
| ४२ | वयमु त्वाम् | ४० | ११(२१-३१) | २०४ | |
| ४३ | प्र कृतान्यृ | ४९ | १४(३२-४५) | २५८ | |
| ४४ | त्वावतः | ५४ | २२(४६-६७) | २६८ | |

| अध्यायः | प्रारंभः | वर्गः | सूक्तानि | मंत्रसंख्या | अष्टकानां मंत्रसंख्या |
|---|---|---|---|---|---|
| ४५ | आ त्वा रथं | ३८ | १४(६८-८१) | १९५ | |
| ४६ | आ प्र द्रव | ३८ | १६(८२-९७) | १९७ | |
| ४७ | इन्द्राय साम | ३९ | १८(९८-१०३; ९।१-११) | १९८ | |
| ४८ | सोमः पुनानो | ३३ | ३१(१३-४३) | २०४ | |
| | | ३३१ | १३५ | | |
| | | | | षष्ठाष्टकस्य मंत्रसंख्या | १७३० |
| ४९ | प्र ण इन्दो | ४१ | २१(४४-६४) | २०० | |
| ५० | हिन्वन्ति | ३३ | ११(६५-७५) | १६३ | |
| ५१ | धर्ता दिवः | २६ | १५(७६-९०) | १३५ | |
| ५२ | असर्जि वक्वा | २८ | १०(९१-१००) | १३८ | |
| ५३ | पुरोजिती वो | ३३ | १९(१०१-११४; १०।१-५) | १८९ | |
| ५४ | अयं स यस्य | २८ | १३(६-१८) | १४१ | |
| ५५ | नि वर्तध्वं | ३० | १४(१९-३२) | १५३ | |
| ५६ | प्र मा युयुज्रे | २९ | १३(३३-४५) | १४४ | |
| | | २४८ | ११६ | | |
| | | | | सप्तमाष्टकस्य मंत्रसंख्या | १२६३ |
| ५७ | प्र होता | ३० | १६(४६-६१) | १६१ | |
| ५८ | ये यज्ञेन | २४ | १०(६२-७१) | १३३ | |
| ५९ | देवानां नु | २८ | १४(७२-८५) | १४८ | |
| ६० | वि हि सोतोः | ३१ | ९(८६-९४) | १६० | |
| ६१ | हये जाये | २७ | ११(९५-१०५) | १४९ | |
| ६२ | उभा उ नूनं | २७ | १४(१०६-११९) | १४० | |
| ६३ | तदिदास | ३० | २३(१२०-१४२) | १७२ | |
| ६४ | त्वं चिदत्रिम् | ४९ | ४९(१४३-१९१) | २१८ | |
| | | २४६ | १४६ | | |
| | | | | अष्टमाष्टकस्य मंत्रसंख्या | १२८१ |

अध्यायाः ६४,वर्गाः २०२४, सूक्तानि १०२८,मन्त्राः १०५५२।

# अथ ऋग्वेदीयः सांख्यायन-सांहिताक्रमः ।

अग्निमीळे० (ऋ० १।१।१)...वा पुरस्तात् ॥ [ऋ० ८।४८।१५]
अभि प्र वः० [ऋ० ८।४९।१]...न आयुः ॥ [ऋ० ८।५९।७]
अग्न आ याहि० [ऋ० ८।६०।१]सुसहासति॥ ऋ० १०।१९१।४

| | | |
|---|---|---|
| संज्ञानमुशना० | ॥१॥ | [परिशिष्ट. ३६] |
| संज्ञानं वः० | ॥२॥ | ” |
| यत् कक्षीवाँ० | ॥३॥ | ” |
| सं वो मनांसि० | ॥४॥ | ” |
| तच्छंयोरा वृणीमहे० | ॥१५॥[१] | ” |
| नैर्हस्त्यं सेनादरणं० | ॥५॥ | ” |
| परिवर्त्मान्येषा० | ॥६॥ | ” |
| येषु नक्षवृषा० | ॥७॥[२] | ” |
| प्राध्वराणां० | ॥८॥ | ” |
| गोकामो अन्नकामः० | ॥९॥ | ” |
| यदक्षरं भूतकृतं० | ॥१०॥ | ” |
| जमदग्निराप्यायते ० | ॥११॥ | [ परिशिष्ट. ३६] |
| शिवा नः प्रदिशः सत्या नः प्रदिशो दिशः | ॥१२॥[३] | ” |
| अजो यत्तेजो ददृशे शुक्रं ज्योतिः परो गुहा | ॥१२॥ | ” |
| यदृषिः कश्यपः० | ॥१३॥ | ” |
| यद्देवानां त्र्यायुषं० | ॥१४॥ | ” |
| तच्छंयोरा वृणीमहे० | ॥१५॥[४] | ” |

इति सांख्यायनीयसंहिता ।

[१] शांख्यायनीये ऋग्वेदे वालखिल्यसूक्तानि संहितान्तर्गतान्येव सन्ति। अतोऽत्र 'अथ वालखिल्यं। इति वालखिल्यं।' इत्यारम्भान्तसूचकं न विद्यते।

[२] 'संज्ञानमुशना' इति शाकलकेऽन्ते यत्परिशिष्टं वर्तते, तत्तु शांख्यायनीय-संहिताया अन्ते एव संहितांगभूतं वर्तते, तस्य चत्वारो वर्गास्ते त्वत्र यथाक्रमं दर्शिताः ।

# अथ ऋग्वेदीयो बाष्कलसंहिताक्रमः ।

गौतमादौशिजः कुत्सः परुच्छेपादृषेः परः । कुत्साद्दीर्घतमा इत्येष तु बाष्कलकः क्रमः ॥२१॥
( अनुवाकानुक्रमणी )

| ऋषयः | प्रारंभाः | अन्ताः | ऋषयः |
|---|---|---|---|
| (मधुच्छन्दा वैश्वामित्रः) | अग्निमीळे १।१।१ | श्रुष्टिमन्तमम् १।९३।१२ | (गोतमो राहूगणः) |
| (कक्षीवान् औशिजः) | नासत्याभ्यां० १।११६।१ | जुषध्वम् १।१३९।११ | (परुच्छेपो दैवोदासिः) |
| (कुत्स आंगिरसः) | इमं स्तोमम० १।९४।१ | उत द्यौः १।११५।६ | (कुत्स आंगिरसः) |
| (दीर्घतमा औचथ्यः) | वेदिषदे प्रिय० १।१४०।१ | हरिश्रियम् ८।५०।१० | (पुष्टिगुः काण्वः) |
| (भर्गः प्रागाथः) | अग्न आ याह्य० ८।६०।१ | सोमस्य पीतये ८।९४।१२ | (बिन्दुराङ्गिरसः) |
| (श्रुष्टिगुः काण्वः) | यथा मनौ सां० ८।५१।१ | चन संनशे ८।५५।५ | (कृशः काण्वः) |
| (तिरश्चिरांगिरसः) | आ त्वा गिरो ८।९५।१ | विघ्नते कम् १०।८८।१८ | (मूर्धन्वानाङ्गिरसः) |
| (मेध्यः काण्वः) | एकं एवाग्नि० ८।५८।२ | सर्वम् ८।५८।२ | (मेध्यः काण्वः) |
| ” ” | यमृत्विजो ८।५८।१ | संवित् ८।५८।१ | ” ” |
| (मूर्धन्वानाङ्गिरसः) | यावन्मात्रमुषसो १०।८८।१९ | सुसहासति १०।१९१।४ | (संवनन आङ्गिरसः) |
| | संज्ञानमुशना० | चतुष्पदे [१५ ऋचः (परिशिष्टं ३६)] | |

॥ इति ऋग्वेदीया बाष्कलसंहिता ॥

## (३७) परिशिष्टम् ।

[ ७ निविदुपनिषदौ ब्रह्मवादिन्यौ । अश्विनौ, ७ इन्द्रावरुणौ । त्रिष्टुप्, ६ द्विपदा । ]

प्रधारयन्तु मधुनो घृतस्य   यद्विन्दथुः सुरीं उस्रियायाः ।
मित्रावरुणौ भुवनस्य कारू   तावश्विना जुषतां समीके   १
आवां रथं शतयावानमाशुं   प्रातर्यावाणं सुषदं हिरण्ययम् ।
आतिष्ठद्यत्र दुहिता विवस्वतस्   तं मामवाश्रमवसे करामहे   २
आवामश्वासो रथिरा विपश्चितो   वाग्धूषजः सुयुजो घृतश्चुतः ।
येभिर्याथोप सूर्यां वरेयं   तेभिर्नो दस्रावववतं समत्सु   ३
यद्वा रेतो अश्विना पोषयित्नु   यद्रासभो वभ्रिमत्यै सुदानू ।
यस्माज्जज्ञे देवकामः सुदक्षस्   स्तदस्यै दत्तं भिषजावभिद्यु   ४
यन्नासत्या भेषजं चित्रभानू   येनावथुस्तोककामां च घोषाम्
तदस्यै दत्तं त्रिषु पुंसुवध्यै   येनाविन्दत्तनयं सा सुहस्त्यम्   ५
वषड् वां दस्रावास्मिन् सुतो   नासत्या होता कृणोतु वेधाः   ६
इन्द्रावरुणा सौमनसमदृप्तं   रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं भूतिमस्मासु धत्तं   दीर्घायुत्वाय प्र तिरतं न आयुः   ७

# ऋग्वेद-संहिता।

## प्रथमं मण्डलम्।

॥ प्रथमोऽष्टकः ॥

[ प्रथमोऽध्यायः ॥१॥ वर्गाः १-३७ ] [ प्रथमोऽनुवाकः ॥१॥ सूक्तानि १-३ ]

### ( १ )

९ मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री ।

॥ओ३म्॥ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् १
अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒—रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति २
अ॒ग्निना॑ र॒यिम॑श्नव॒त् पोष॑मे॒व दि॒वेदि॑वे । य॒शसं॑ वी॒रव॑त्तमम् ३
अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ । स इद् दे॒वेषु॑ गच्छति ४
अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒रा ग॑मत् ५ [१]

यद॒ङ्ग दा॒शुषे॒ त्व॒—मग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत् तत् स॒त्यम॑ङ्गिरः ६
उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ७
राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् । वर्ध॑मानं॒ स्वे दमे॑ ८
स नः॑ पि॒तेव॑ सू॒नवे ऽग्ने॑ सूपाय॒नो भ॑व । सच॑स्वा नः स्व॒स्तये॑ ९ [२] (९)

### ( २ )

९ मधुच्छन्दा वैश्वामित्रः । १-३ वायुः; ४-६ इन्द्र-वायू;
७-९ मित्रा-वरुणौ । गायत्री ।

वाय॒वा या॑हि दर्शते॒—मे सोमा॒ अरं॑कृताः । तेषां॑ पाहि श्रु॒धी हव॑म् १
वाय॑ उ॒क्थेभि॑र्जरन्ते॒ त्वामच्छा॑ जरि॒तारः॑ । सु॒तसो॑मा अह॒र्विदः॑ २
वायो॒ तव॑ प्रपृञ्च॒ती धेना॑ जिगाति दा॒शुषे॑ । उ॒रू॒ची सोम॑पीतये ३
इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम् । इन्द॑वो वामु॒शन्ति॒ हि ४
वाय॒विन्द्र॑श्च चेतथः सु॒ताना॑ं वाजिनीवसू । तावा या॑त॒मुप॑ द्र॒वत् ५ [३]

वाय॒विन्द्र॑श्च सुन्व॒त आ या॑त॒मुप॑ निष्कृ॒तम् । म॒क्ष्वि१॒॑त्था धि॒या न॑रा ६ (१५)

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ७
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ८
कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ९ [४](१८)

(३)

१२ मधुच्छन्दा वैश्वामित्रः । १-३ अश्विनौ; ४-६ इन्द्रः; ७-९ विश्वे देवाः, १०-१२ सरस्वती । गायत्री ।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् १
अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरः २
दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनी ३
इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ४
इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ५
इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ६ [५]

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ७
विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि ८
विश्वे देवासो अस्रिध एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयः ९
पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः १०
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ११
महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति १२ [६](३०)

(४)   [ द्वितीयोऽनुवाकः ॥२॥ सू० ४-७ ]

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि १
उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद् रेवतो मदः २
अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ३
परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ४
उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद् दुवः ५ [७]

उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ६
एमाशुमाशवे भर यज्ञश्रियं नृमादनम् । पतयन् मन्दयत्सखम् ७
अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ८ (३८)

तं त्वा वाजेषु वाजिनं   वाजयामः शतक्रतो । धनानामिन्द्र सातये ९
यो रायो३ऽवनिर्महान्त्सुपारः सुन्वतः सखा । तस्मा इन्द्राय गायत १० [८] (४०)

(५)

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

आ त्वेता नि षीदते—न्द्रमभि प्र गायत । सखायः स्तोमवाहसः १
पुरूतमं पुरूणा—मीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते २
स घा नो योग आ भुवत्   स राये स पुरंध्याम् । गमद्वाजेभिरा स नः ३
यस्य संस्थे न वृण्वते   हरी समत्सु शत्रवः । तस्मा इन्द्राय गायत ४
सुतपाव्ने सुता इमे   शुचयो यन्ति वीतये । सोमासो दध्याशिरः ५ [९]

त्वं सुतस्य पीतये   सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ६
आ त्वा विशन्त्वाशवः   सोमास इन्द्र गिर्वणः । शं ते सन्तु प्रचेतसे ७
त्वां स्तोमा अवीवृधन्   त्वामुक्था शतक्रतो । त्वां वर्धन्तु नो गिरः ८
अक्षितोतिः सनेदिमं   वाजमिन्द्रः सहस्रिणम् । यस्मिन् विश्वानि पौंस्या ९
मा नो मर्ता अभि द्रुहन्   तनूनामिन्द्र गिर्वणः । ईशानो यवया वधम् १० [१०] (५०)

(६)

१० मधुच्छन्दा वैश्वामित्रः । १–३ इन्द्रः, ४, ६, ८, ९ मरुतः,
५, ७ मरुत इन्द्रश्च, १० इन्द्रः । गायत्री ।

युञ्जन्ति ब्रध्नमरुषं   चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि १
युञ्जन्त्यस्य काम्या   हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा २
केतुं कृण्वन्नकेतवे   पेशो मर्या अपेशसे । समुषद्भिरजायथाः ३
आदह स्वधामनु   पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ४
वीळु चिदारुजत्नुभि—र्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ५ [११]

देवयन्तो यथा मति—मच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ६
इन्द्रेण सं हि दृक्षसे   संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ७
अनवद्यैरभिद्युभि—र्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ८
अतः परिज्मन्ना गहि   दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ९
इतो वा सातिमीमहे   दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः १० [१२] (६०)
*

(७)

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत १

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः २

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ३

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ४

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ५ [१३]

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ६

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ७

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ८

य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ९

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः १०[१४](७०)

(८) [ तृतीयोऽनुवाकः ॥३॥ सू० ८-११ ]

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर १

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता २

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधः ३

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतः ४

महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ५ [१५]

समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवः ६

यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ७

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ८

एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित् सन्ति दाशुषे ९

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये १०[१६](८०)

(९)

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा १

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये २ (८२

मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ३
असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् ४
सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् । असदित् ते विभु प्रभु ५ [१७]

अस्मान्त्सु तत्र चोदये न्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ६
सं गोमदिन्द्र वाजव दस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ७
अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् । इन्द्र ता रथिनीरिषः ८
वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् । होम गन्तारमूतये ९
सुतेसुते न्योकसे बृहद् बृहत एदरिः । इन्द्राय शूषमर्चति १० [१८] (९०)

(१०)

१२ मधुच्छन्दा वैश्वामित्रः। इन्द्रः। अनुष्टुप्।

गायन्ति त्वा गायत्रिणो ऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद् वंशमिव येमिरे १
यत् सानोः सानुमारुहद् भूर्यस्पष्ट कर्त्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति २
युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ३
एहि स्तोमाँ अभि स्वरा ऽभि गृणीह्या रुव । ब्रह्म च नो वसो सचे न्द्र यज्ञं च वर्धय ४
उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे । शक्रो यथा सुतेषु णो रारणत् सख्येषु च ५
तमित् सखित्व ईमहे तं राये तं सुवीर्ये । स शक्र उत नः शक दिन्द्रो वसु दयमानः ६ [१९]

सुविवृतं सुनिरज मिन्द्र त्वादातमिद्यशः । गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ७
नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः । जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ८
आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः । इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ९
विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् । वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् १०
आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब । नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ११
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः १२ [२०]
(१०२)

(११)

८ जेता माधुच्छन्दसः। इन्द्रः। अनुष्टुप्।

इन्द्रं विश्वा अवीवृधन्त् समुद्रव्यचसं गिरः । रथीतमं रथीनां वाजानां सत्पतिं पतिम् १
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते । त्वामभि प्र णोनुमो जेतारमपराजितम् २
पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः । यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ३
(१०५)

पुरां भिन्दुर्युवा कवि—रमितौजा अजायत । इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ४
त्वं वलस्य गोमतो ऽपावरद्रिवो बिलम् । त्वां देवा अबिभ्युषस् तुज्यमानास आविषुः ५
तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् । उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ६
मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः । विदुष्टे तस्य मेधिरास् तेषां श्रवांस्युत्तिर ७
इन्द्रमीशानमोजसा—भि स्तोमा अनूषत । सहस्रं यस्य रातय उत वा सन्ति भूयसीः ८[२१]
(११०)

( १२ )   [चतुर्थोऽनुवाकः ॥४॥ सू० १२-१७]

१२ मेधातिथिः काण्वः । अग्निः, ६ प्रथमपादस्य [निर्मथ्याहवनीयौ] अग्नी । गायत्री ।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् १
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् २
अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ३
ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषि ४
घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ५
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ६ [२२]
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ७
यस्त्वामग्ने हविष्पति—र्दूतं देव सपर्यति । तस्य स्म प्राविता भव ८
यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय ९
स नः पावक दीदिवो ऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नः १०
स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ११
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः १२ [२३](१२२)

( १३ )

१२ मेधातिथिः काण्वः । (आप्रीसूक्तं, अग्निरूपा देवताः=) १इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ उषासानक्ता, ८ दैव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च १
मधुमन्तं तनूनपाद् यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये २
नराशंसमिह प्रिय—मस्मिन् यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ३
अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हितः ४
स्तृणीत बर्हिरानुषग् घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ५ (१२७)

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ६ [२४]

नक्तोषासा सुपेशसा ऽस्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदे ७

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ८

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ९

इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः १०

अव सृजा वनस्पते देव देवेभ्यो हविः । प्र दातुरस्तु चेतनम् ११

स्वाहा यज्ञं कृणोतने—न्द्राय यज्वनो गृहे । तत्र देवाँ उप ह्वये १२ [२५] (१३४)

(१४)

१२ मेधातिथिः काण्वः । विश्वे देवाः ( विश्वैर्देवैः सहितोऽग्निः ), ३ इन्द्रवायुबृहस्पतिमित्राग्निपूषभगादित्यमरुद्गणाः, १० विश्वदेवाग्नीन्द्रवायुमित्रधामानि, ११ अग्निः । गायत्री ।

ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये । देवेभिर्याहि यक्षि च १

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आ गहि २

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान् मारुतं गणम् ३

प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः । द्रप्सा मध्वश्चमूषदः ४

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ५

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये ६ [२६]

तान् यजत्राँ ऋतावृधो ऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ७

ये यजत्रा य ईड्यास् ते ते पिबन्तु जिह्वया । मधोरग्ने वषट्कृति ८

आकीं सूर्यस्य रोचनाद् विश्वान्देवाँ उषर्बुधः । विप्रो होतेह वक्षति ९

विश्वेभिः सोम्यं मध्व—ऽग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः १०

त्वं होता मनुर्हितो ऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ११

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह १२ [२७] (१४६)

(१५)

१२ मेधातिथिः काण्वः । [ प्रतिदैवतं ऋतुसहितम् =] १ इन्द्रः, २ मरुतः, ३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ, ७-१० द्रविणोदाः, ११ अश्विनौ, १२ अग्निः । गायत्री ।

इन्द्र सोमं पिब ऋतुना ऽऽ त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः १

मरुतः पिबत ऋतुना पोत्राद् यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः २

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ३

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ४ (१५०)

ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ५
युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ६ [२८]

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ७
द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ८
द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ९
यत् त्वा तुरीयमृतुभि र्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव १०
अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ११
गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज १२ [२९] (१५८)

(१६)

९ मेधातिथिः काण्वः । इन्द्रः । गायत्री ।

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः १
इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे २
इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ३
उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः । सुते हि त्वा हवामहे ४
सेमं नः स्तोममा ग ह्युपेदं सवनं सुतम् । गौरो न तृषितः पिब ५ [३०]

इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ६
अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ७
विश्वमित्सवनं सुत मिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ८
सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ९ [३१] (१६७)

(१७)

९ मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री, ४-५ पादनिचृत् (५ ह्रसीयसी वा) गायत्री ।

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे १
गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् २
अनुकामं तर्पयेथा मिन्द्रावरुण राय आ । ता वां नेदिष्ठमीमहे ३
युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ४
इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ५ [३२]

तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ६ (१७३)

इन्द्रावरुण वामहं हुवे चित्राय राधसे । अस्मान्त्सु जिग्युषस्कृतम् ७
इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ८
प्र वामश्नोतु सुष्टुति—रिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम् ९ [३३] (१७६)

(१८) [ पञ्चमोऽनुवाकः ॥५॥ सू० १८-२३ ]

१ मेधातिथिः काण्वः । १-३ ब्रह्मणस्पतिः, ४ इन्द्रो ब्रह्मणस्पतिः सोमश्च, ५ ब्रह्मणस्पतिः सोम इंद्रो दक्षिणा च, ६-८ सदसस्पतिः, ९ सदसस्पतिर्नराशंसो वा । गायत्री ।

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः १
यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः २
मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ३
स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ४
त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ५ [३४]

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ६
यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । स धीनां योगमिन्वति ७
आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होत्रा देवेषु गच्छति ८
नराशंसं सुधृष्टम—मपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ९ [३५] (१८५)

(१९)

१ मेधातिथिः काण्वः । अग्निर्मरुतश्च । गायत्री ।

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि १
नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि २
ये महो रजसो विदु—र्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ३
य उग्रा अर्कमानृचु—रनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ४
ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ५ [३६]

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ६
य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आ गहि ७
आ ये तन्वन्ति रश्मिभिस् तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ८
अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ९ [३७] (१९४)

